

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 09
December-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

डिसेम्बर् - २०२३ रू. २०/-

## तिरुमलक्षेत्रे
## वैकुण्ठ एकादशी पर्वदिन सन्दर्भे स्वर्णरथयात्रा
## 23-12-2023

## कपिलेश्वर स्वामिनः देवालयः, तिरुपतिः

तिरुपतिस्थः ३ कि.मी. दूरेस्थित पर्वत मध्ये श्री कपिलेश्वरस्वामिनः देवालयः वर्तते। कपिल महर्षेः तपसाः सन्तुष्टः भगवान् शिवः श्रीकपिलेश्वरस्वामि नाम्ना शिवलिङ्गरूपेण आविर्भूतः। अत्र स्थितस्य तीर्थस्य कपिलतीर्थः इति नाम अस्ति। कार्तिकमासे अत्र बहवः भक्ताः पुण्यस्नानानि आचरन्ति। प्लवोत्सवः आर्द्रा नक्षत्र दर्शनं च इति महोत्सवौ धनुर्मासे प्रचलिष्यतः।



| दिनाङ्कः | वासरः | प्लवोत्सवस्य क्रमः |
|---|---|---|
| 22-12-2023 | भृगुवासरः | श्री विघ्नेश्वर स्वामिनः, श्री चन्द्रशेखर स्वामिनः |
| 23-12-2023 | मन्दवासरः | श्री सुब्रह्मण्य स्वामिनः |
| 24-12-2023 | भानुवासरः | श्री सोमस्कन्द स्वामिनः |
| 25-12-2023 | इन्दुवासरः | श्री कामाक्षी देव्याः |
| 26-12-2023 | भौमवासरः | श्री चण्डीश्वर स्वामिनः, श्री चन्द्रशेखर स्वामिनः |
| 27-12-2023 | सौम्यवासरः | श्री कपिलेश्वर स्वामिनः आर्द्रा नक्षत्र दर्शनम् |







# गीतामृतम्



श्रीभगवानुवाच -

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति।।

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत।।

(भगवद्गीता २-१७-१८)

श्रीभगवान् उवाच हे अर्जुन!

भावः - व्याप्तमस्ति सर्वमिदं जगत् तत् वस्तु (परमात्मा) विनाशरहितं भवति। विनाशरहितम् एतं नाशयितुं कश्चिदपि न शक्नोति। हे भारत! शरीरे विद्यमानः आत्मा नित्यः नाशरहितः। अयमेतादृशः इति ज्ञातुमशक्यः। अस्य जीविनः सम्बन्धिनः देहाः तु नाशवन्तः। अतः आत्मविषये वा देहविषये वा विचारं त्यक्त्वा युद्धं कुरु।

# सङ्कीर्तनम्

देवदेवं भजे दिव्यप्रभावम्।
रावणासुरवैरि रणपुङ्गवं रामम्।।
राजवरशेखरं रविकुलसुधाकरं
आजानुबाहुं नीलाभ्रकायम्।



राजारि कोदण्ड राज दीक्षागुरुं
राजीवलोचनं रामचन्द्रं रामम्।। ।।देव देवं।।

नीलजीमूत सन्निभशरीरं घनवि-
शालवक्षं विमल जलजनाभम्।
तालाहिनगहरं धर्मसंस्थापनं
भूललनाधिपं भोगिशयनम् रामम्।।।।देव देवं।।

पङ्कजासनविनुत परमनारायणं
शङ्करार्जित जनक चापदलनम्।
लङ्का विशोषणं लालितविभीषणं
वेङ्कटेशं साधु विबुध विनुतं रामम्।।।।देव देवं।।

- अन्नमाचार्य सङ्कीर्तनम्

सम्पादकीयम्

# हरिहरात्मकम्

विदितचरमेव न कार्तिकसमो मासः इति सार्वजनीनं वचनम्। कृत्तिकानक्षत्रेण सह पूर्णचन्द्रस्य योगे कार्तिकमासो भवति। अयं च चान्द्रमानानुसारं वर्षे अष्टमो मासः। अत्र शिवकेशवयोः समानतया पूजाविधानं भवति। कार्तिकमासे विष्णुः दामोदररूपेण आराध्यते। शिवः सोमवासरेषु अभिषेकादिभिः पूज्यते। कैशिकीद्वादशी, उत्थानैकादशी च अस्मिन्नेव मासे भवति। इदमेव पर्व क्षीराब्ध्येकादशी इति कथ्यते। अत्र विशेषतः द्वादशी कैशिकीनाम्ना प्रसिद्धा। मङ्गलकैशिकीनामकस्य कस्यचित् गानकैङ्कर्यपरस्य दिव्यमवदानं श्रीवेङ्कटेश्वरदेवालये काञ्चीपुराचार्यैः पारायणं क्रियते। अयं च वृत्तान्तः वराहपुराणे द्विचत्वारिंशत्तमे अध्याये वर्तते। वराहपुराणस्थेन अनेन अवदानेन भगवतः समीपे भक्तजनानां सामाजिकोच्चनीचभावना नास्तीति सन्देशो लभ्यते।

अस्मिन्नेव समये श्रीनिवासमूर्तिपञ्चके उग्रश्रीनिवासमूर्तिं सूर्योदयात्पूर्वमेव सर्वालङ्कृतं श्रीदेवीभूदेवीसमेतं उत्सवयात्रायां बहिरानीय उत्सवमार्गे तालमेलादिभिः सेवन्ते। पूर्वमयम् उग्रश्रीनिवासमूर्तिः यदा सूर्यप्रकाशसमये उत्सवार्थं बहिरानीतः, तदा अग्निप्रमादो जातः। तेन कारणेन वर्षे एकवारमेव सूर्योदयात्पूर्वम् उत्सवार्थं बहिरानीय तस्मिन्नेव समये अन्तः नेयन्ति। यदि उग्रश्रीनिवासमूर्तौ सूर्यकिरणाः पतन्ति चेत् लोकाय हानिरिति श्रूयते। इदमेव वैशिष्ट्यं कैशिकद्वादश्याम् उग्रश्रीनिवासमूर्तेः शोभायात्राविधाने।

एवमेव कार्तिकपूर्णिमायां शिवस्य ज्वालातोरणमहोत्सवः दक्षिणभारते आचर्यते। शिवः कालकूटं यदा पीतवान्, तदा पार्वती पत्युः अनर्थनिवारणाय इदं व्रतम् आचरितवतीति तन्मार्गेण अयम् उत्सवः क्रियते। अनेन उत्सवेन दम्पत्योः परस्परं हितैषिता व्यक्ता भवति। कार्तिकामावस्यायां पोलिस्वर्गमु इति नाम्ना रात्रौ तडागादिषु दीपप्लावनं क्रियते। अस्यापि उत्सवस्य प्रामुख्यं यत् काचन शिवभक्ता रजकी श्वशुरालये कार्यवशात् कार्तिकस्नानादिकं कर्तुं न शक्ता मनसा तदेव चिन्तयन्ती अमावास्यायां तडागे दीपप्लावनं कृत्वा स्वर्गं गता इति। अत्रापि भगवतः सान्निध्ये समता सामाजिकता च प्रतिफलिता भवति। अस्मिन् मासे सूर्योदयात्पूर्वं स्नानम्, दानम्, उपवासः अर्चनम् इत्येतेषां विशेषफलं वर्णितमस्ति।

मासानां मार्गशीर्षोऽहमिति कालस्वरूपस्य भगवतः श्रीकृष्णस्य वचनानुसारं मार्गशीर्षमासस्य प्रामुख्यं स्पष्टं भवति। मुक्तिमार्गेषु शीर्षस्थानं भवतीति अस्य मासस्य वैशिष्ट्यम्। अस्मिन्नेव मासे धनुर्मासोऽपि आरभ्यते अस्मिन् वर्षे गीताजयन्ती अपि अत्रैव भवति। वैकुण्ठैकादश्यां वैकुण्ठद्वाराणि अपि उद्घाटितानि भवन्ति। दत्तात्रेयजयन्ती अस्य मासस्य पूर्णिमायाम् आचर्यते।

धनुर्मासे गोदादेव्याः आराधनं क्रियते। धनुर्लग्नं यावत् प्रातः काले पूजनेन वैष्णवसम्प्रदायानुसारं फलं लभ्यते इति वैष्णवैः सह इतरसम्प्रदायानुसारिभिरपि व्रतमिदम् आचर्यते। अस्मिन्नेव मासे नूतनसस्यादिकं फलति। तेन कारणेन सर्वेऽपि अत्यन्तं प्रसन्नाः समाजिकोत्सवान् आचरन्ति।प्रातःकाले कन्याभिः गोमयोपलादीनाम् (गोब्बेम्मा) आराधनं क्रियते।

हरिदासकीर्तनानि वीथीनृत्यप्रदर्शनानि जरद्गवक्रीडनादिकं महता संरम्भेण क्रियन्ते। अयं मासः दानादीनां कृते प्रशस्तो भवति। शिवकेशवयोरपि अयं मासः प्रधानो भवति। एतादृशपर्वभिः मासाचारैः समस्तजनतायाम् एकता जातिवर्णवर्गसम्प्रदायेषु जागरणं च सम्पाद्यते।

ओं नमो वेङ्कटेशाय

# डिसेम्बर् २०२३

सम्पुटिः-१० सञ्चिका-०९

श्रीशोभकृत्संवत्सरस्य कार्तिककृष्णचतुर्थी तः
श्रीशोभकृत्संवत्सरस्य मार्गशिरकृष्णचतुर्थीपर्यन्तम्-१९४४



मुखचित्रम् - तिरुमलक्षेत्रे स्वर्णरथयात्रा
अन्तिमरक्षापुटः - गीताजयन्ती

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका



# गीतायां मोक्षसन्न्यासयोगस्य प्रामुख्यम्



डा. के.सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०

मोक्षसन्न्यासयोगे मोक्षस्य सन्न्यासस्य च लक्षणानि विस्पष्टं प्रोक्तानीत्यस्य अध्यायस्य मोक्षसन्न्यासयोग इति नाम कृतम्। समस्तकर्मणां सर्वानुष्ठानानां पर्यवसानं मोक्ष एव इति अनेनैव अध्यायेन ग्रन्थसमाप्तिरपि भवतीति कारणात् अध्यायस्य नाम सार्थकमेव। सर्वाश्रमाणाम् अन्तिमस्थानं तुरीयाश्रम इति कारणाच्च तुरीयस्थितेः मोक्षस्य ज्ञानं अवगमयतीति मोक्षसन्न्यासयोग इति नामद्वयमत्र दृश्यते। ब्रह्मचर्याद्याश्रमत्रयाणां सम्यगनुष्ठानानन्तरमेव तुरीयाश्रमप्रवेशाय योग्यता सम्पद्यते इति कृष्णोपदिष्टसप्तदशाध्यायविषयानुष्ठानानन्तरमेव सन्न्यासाश्रमात् मोक्षः सिध्यतीति गूढार्थोऽपि अस्मिन्नध्यायनाम्नि वर्तते इति सूच्यते। सर्वाश्रमवासिभिः सन्न्यासाश्रमः अवश्यं स्वीकर्तव्य इति व्यक्तीभवति। नो चेत् निर्विषयनिस्संकल्पनिस्तत्वस्थितिः प्राणिनां अलभ्यैव इति श्रुतिवाक्यं मनसि निधायैव भगवता कृष्णेन अस्य अध्यायस्य नामकरणं कृतं स्यात्।

अत एव गीतोपदेशं प्राप्तः अर्जुनः, धर्मराजादयः च अन्ते सर्वं परित्यज्य सन्न्यासाश्रमं स्वीकृत्य महाप्रस्थानं चक्रुः। पाण्डवानां महाप्रस्थानस्वर्गारोहणादिभागपठनेनैव अयं विषयः सम्यगवबुध्यते। त्यागशब्दस्य सन्न्यासशब्दस्य लक्ष्यमेकमेव। एतदध्यायविषयः अगाधः असामान्यश्च अत्र परमप्राप्तिप्रतिपादनात् ''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'' इति चरमश्लोऽको दृश्यते। वैष्णवसांप्रदायिकानां अतिप्राधानोऽयं ध्येयविषयः। अस्मिन् विषये श्रीरामानुजाचार्यैः महद्भाष्यमुल्लिखितम्। सन्न्यासे सर्वकर्मफलत्यागः प्रधानः न केवलं शिखाच्छेदनकाषायवस्त्रधारणमित्यवगन्तव्यम्। मानवाः सप्तदशाध्यायेषु विषयबोधाचरणात् अवश्यं जीवन्मुक्ताः भवेयुः। अज्ञानदशायां जीवः बद्धः इति मनुते। गीतार्थानुष्ठानात् अज्ञाननाशात् ज्ञानोदयो भवति। तदा मानवः अहं चित्स्वरूपः ईश्वरांशः नित्यः कदापि नाहं बद्धः इति अवबुद्धो भवति। तदा आत्मस्वरूपज्ञेन तेन मोक्षापेक्षापि उपेक्षणीया एव इति मोक्षसन्न्यासयोगशब्दः बोधयति। अत्र बहवश्श्लोकाः एतत्सम्बन्धिनः एव।

अविद्यामोहस्थितिपर्यन्तमेव जीवस्य भ्रान्तयः जायन्ते। निष्कामकर्माचरणात् जीवः परिहृतावरणः निजस्वरूपज्ञानी भवति। पञ्चमाध्याये षोडशश्लोके अज्ञानात् ज्ञानमावृतमिति अज्ञानावरणे नष्टे आत्मज्ञानं सूर्य इव स्वयं प्रकाशते इत्युक्तम्। तदाऽहं ब्रह्मास्मीति बोधो भवति। मोक्षप्राप्तिसङ्कल्पोऽपि परित्याज्य एव। सङ्कल्पपर्यन्तम् आत्मा

अपूर्णस्थितावेव भवति। अपूर्णहृदयादेव सङ्कल्पाः जायन्ते। शुद्धप्रकृतौ शुद्धभावाः अशुद्धप्रकृतौ अशुद्धभावा उत्पद्यन्ते। शुद्धजीवे यः कोऽपि सङ्कल्पभावः न स्यात्। दृश्यमाननामरूपाणि मायाकल्पितानि। आदौ मायास्वरूपमेव नासीदित्येतादृशपरब्रह्मज्ञानस्थितिरेव मुक्तिरिति सर्वं भगवन्मयमिति भक्तानां वेदान्तिनाम् अनुभवः। एतादृशानां भक्तानां पुनर्जन्म न स्यात्। लोकोद्धरणार्थं केचिज्जन्म गृह्णन्ति।

सर्वाध्यायसारः मोक्षसन्न्यासयोगे भवति। इतराध्यायेषु लुप्ताः विषयाः अत्र सम्यक् भगवता प्रोक्ताः। चतुर्दशाध्यायस्थ त्रिगुणाः सप्तदशाध्यायस्थ श्रद्धात्रयमधिकृत्य च अत्रोपदिष्टः। अपि च निष्कामकर्मणा ईश्वरप्राप्तिरित्यत्रैव प्रोक्तम्। निर्विकल्पसमाधिरपि अत्रैवोपदिष्टः। ४९ श्लोकादारभ्य ५४ श्लोकपर्यन्तं ज्ञात्वा ब्रह्मनिष्ठापरैः आचरणीयांशाः संक्षिप्ततया अत्रोपदिष्टाः। गीतायाः प्राणोऽयं विषयः मोक्षमार्गद्वारकवाटोद्घाटनश्लोकं पश्यन्तु "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः"। गीताशास्त्रे उपदेशके श्रीकृष्णे यादृशी विश्वासभक्तिः तादृशं फलं अभ्यासकोऽप्यवश्यं प्राप्नुयात्। अर्जुनाय संक्षिप्ततया गीतोपदेशे कृष्णस्य अध्यायक्रमसमावेशं परिशीलयामः सर्वेष्वध्यायेषु अध्यायानामन्ते योगः शब्दः प्रयुक्तः। पतञ्जलिना योगः चित्तवृत्तिनिरोधः इत्युक्तम्। योगो नाम ईश्वरसाक्षात्कारः इति जीवब्रह्मणोः एकत्वमिति आत्मसाक्षात्कारज्ञानमिति मुख्यार्थाः भवन्ति। योगी मनोदेहौ, विजित्य निराशः अपरिग्रहः आत्मानं परमात्मनि ऐक्यं करोति "योगी युञ्जीत ..... निराशीरपरिग्रहः" इति तां योगमिति मन्यन्तेस्थिरामिन्द्रियधारणाम्" इति योगिनः योगमधिकृत्य प्रोक्तम्।

**१. विषादयोगः -** ज्ञानोपदेशाय वैराग्यमावश्यकम्। अर्जुनः चित्तभ्रान्त्या युद्धात्, बन्धुनाशजन्यात्, पातकात् नरकप्राप्तिर्भवेदिति, किंकर्तव्यतामूढः विषादे, पतितः। विषादात् वैराग्यं, वैराग्यात् मुमुक्षुत्वं, मुमुक्षुत्वात् भवबन्धमुक्तिः जीवन्मुक्तिरूपमोक्षः सिध्यति। अतः विषादस्यापि योगः इति विषादयोगः इति नाम आदौ समुचितमेव।

आत्मनः नाशो न भवेदिति अर्जुनाय बोद्धुमेव सांख्ययोगः भगवता प्रोक्तः।

**२. सांख्ययोगः -** कृष्णोपदेशादर्जुनः नष्टशोकमोहः अभूत्। अप्राप्तात्मोपदेशस्य शोकमोहविनाशो न भवेत्। "अच्छेद्योयमदाह्योयमक्लेद्योऽशोष्यएव च। नित्यस्सर्वगतः स्थाणुरचलोयं सनातनः। सांख्ययोगः मुमुलक्षणां प्राणभूतः। अत्रैव स्थिप्रज्ञलक्षणानि सम्यगुपदिष्टानि (५४ श्लोकात् ७२ श्लोकपर्यन्तम्)

**३. कर्मयोगः -** कर्म कथं कर्तव्यम् - कीदृशकर्मणा जीवः इहपरसौख्यं प्राप्नोति इत्यादिविषयाः कर्मयोगे प्रोक्ताः। काम्यनिष्कामनिषिद्धकर्माणीति कर्माणि त्रिविधानि। निष्कामकर्मणैव जीवः अन्तःकरण शुध्या ईश्वरानुग्रहं प्राप्य मोक्षार्हो भवति। कर्मयोगिनापि देहसंरक्षणार्थम् आश्रमानुगण अनुष्ठानशास्त्रोक्तकर्म अवश्यं कर्तव्यम्। असक्तकर्मणा पुरुषः मुक्तिं प्राप्नोति "तस्मादसक्तः" (३-१९)

**४. ज्ञानयोगः -** निष्कामकर्माचरणात् पापनाशादन्तः - करणशुद्धिः, ततः ज्ञानोदयो भवति। कर्मयोगफलदर्शनायैव ज्ञानयोगः समुपकल्पितः। "वीतरग.... ज्ञानतपसा.... मद्भावमागताः"॥ इत्यत्र श्लोकः अवेधयः।

**५. कर्मसन्न्यासयोगः -** कर्मणः सन्न्यासस्य भेदाभेदनिर्णयाय कर्मसन्न्यासयोगः परिकल्पितः। कर्मयोगः अथवा ज्ञानयोगः श्रेष्ठः अर्थात् गृहस्थाश्रमः अथवा सर्वसङ्गपरित्यागसन्न्यासः श्रेष्ठः इति प्रश्नस्य समाधानमत्रनिर्णीतम्। अन्तःकरणशुद्धया निस्सङ्गत्वं साधयित्वा इन्द्रियजयात् यदि आत्मज्ञानं प्राप्स्यति कर्मज्ञानयोगावुभावपि श्रेष्ठाववेति भगवदुक्तिः। तत्रापि

अनुष्ठानपराः आत्मज्ञानिनः परमश्रेष्ठाः ''सन्न्यासः ... कर्मयोगश्च.. कर्मयोगो विशिष्यते'' इत्यत्र श्लोकः।

**६. आत्मसंयमयोगः -** आत्मा नाम मनः अथवा जीवात्मेत्यर्थः ग्राह्यः। संयमो नाम आत्मनः परमात्मनि लयीकरणम्। मनोलयार्थं सर्वसंस्कारगुणनाश आवश्यकः। एतदर्थम् अपेक्षितोपायास्सर्वे अस्मिन्नध्याये प्रोक्ताः। योगशास्त्रप्रोक्तसर्वानुष्ठानानि अत्र प्रदर्शितानि। एतदनुष्ठानार्थं सर्वेऽपि योग्याः एव। आत्मसंस्कारे साधकेन अतिजाग्रता भाव्यम्। आत्मनिष्ठायामपरिपूर्वः पुनर्जन्मनि उत्तमवंशजातकः आत्मध्याने पुनः प्रवृत्तो भवेदित्ययं विषयः सुविशदमत्र प्रपञ्चितम्। ''यं सन्न्यासमिति.... योगी भवति कश्चन'' इत्यत्र श्लोकः।

**७. विज्ञानयोगः -** विज्ञानयोगो नाम अनुभवजन्यं, ज्ञानं विशेषज्ञानं, दैवसाक्षात्कारः, ज्ञेयप्राप्तिरित्यर्थाः भवन्ति। वेदान्तशास्त्रे ज्ञानविज्ञानमिति भागद्वयमस्ति। शमदमादिसुगुणसमुदायस्यापि ज्ञानमिति वदन्ति। त्रयोदशाध्याये ज्ञानं ज्ञेयमधिकृत्य विस्तृतया प्रोक्तम्। निगूढवस्त्वज्ञानम्, अतिरहस्यतत्त्वज्ञानमित्यपि विज्ञानस्य नाम भवति। भगवान् आकाशे शब्दरूपेण वायौ स्पर्शरूपेण अग्नौ तेजोरूपेण, जले रसरूपेण भूमौ गन्धरूपेण, वेदे प्रणवरूपेण सूर्यचन्द्रादिषु प्रकाशरूपेण वर्तते इत्यत्र प्रोक्तम् इदमेव विज्ञानस्य परमरहस्यम्। सामान्यजनज्ञानं अज्ञानावृत्तं भवति। अतस्ते इदं रहस्यं न जानन्ति। अस्मिन् रहस्ये एव द्वैताद्वैतविशिष्टाद्वैततत्त्वं वर्तते। ''रसोऽहमप्सु... पौरुषं नृषु'' इत्यत्र श्लोकः।

**८. अक्षरपरब्रह्मयोगः -** नाशरहितपरब्रह्मप्राप्तिमुपदिशतीति योगस्यास्य अक्षरपरब्रह्मयोगः इति नाम प्राप्तम्। नाशरहितमेव ब्रह्मंपरब्रह्मांशजीवसंज्ञाविशिष्टप्रत्यगात्मनः स्वभाव एव अध्यात्ममिति। सकलभूतोत्पत्तेः हेतुभूतां देवतामुद्दिश्य मन्त्रपूर्वकं क्रियमाणं यज्ञमेव कर्म। नश्यच्छरीरादिपदार्थाः अधिभूतमिति। अक्षरहिरण्यगर्भ एव अधिदेवतमिति देहे सर्वात्मकः भगवानेव। यः अन्त्यकाले भगवन्तं स्मरन् देहत्यागं करोति सः विष्णुस्वरूपं मोक्षं प्राप्नोति। यः कोऽपि प्राणप्रयाणसमये प्रणवोच्चारणेन परमात्मनः ध्यानात् अक्षरपरब्रह्म प्राप्नुयात्। ''ओमित्येकाक्षरं परमां गतिम्'' इत्यत्र श्लोकः ८-१३.

**९. राजविद्याराजगुह्ययोगः -** ब्रह्मविद्यासु राजत्वात् पुरा इक्ष्वाक्वादिभिः राजभिः अनुष्ठीय राज्यपालनात् जीवन्मुक्तिः प्राप्तेति पुरा परशुरामेण क्षत्रियविनाशात् क्षत्रधर्मस्य पश्चात् ह्रासः अभूत्। अस्य राजविद्याराजगुह्ययोगः इति नाम कृतम्। रहस्येषु अतिरहस्यात्वादपि अयं योगः सार्थकनामधेयः। सुदुराचारोऽपि भक्त्या भगवन्तं सेवयानः साधुरेव इति ब्रह्मविद्यार्थं सर्वेऽपि योग्या एवेत्यत्र प्रतिपादितम्।

**१०. विभूतियोगः -** ईश्वरविभूतेः वर्णनात् विभूतियोगः इत्यध्यायस्य नामकृतम्। ईश्वरशक्तेः महिमातिशयस्यापि विभूतिरित्येव नाम। सर्वेश्वरस्य योगशक्तिम् अनन्तां ज्ञातुं देवताभिरपि दुस्साध्यमिति भगवता प्रोक्तम्। अत एव साकारमूर्तिपूजादयाः कल्पिताः।

निराकारः परमेश्वरः इन्द्रियातीतज्ञानेनैव ज्ञातुं शक्यः। एतादृशं ज्ञानं समाधिस्थितावेव लभ्यते। तावत्पर्यन्तम् इन्द्रियगोचरा या कापि मूर्तिः मनसा आराधनीया भवति भगवतः करुणाप्रकाशज्ञानस्वरूप व्यापकस्वरूपभावना मूर्तिपूजायामेव अन्तर्भवति। सामान्यजनैः अनन्तभगवद्विभूतिं ज्ञातुं काश्चित् प्रधानविभूतयः अस्मिन्नध्याये प्रपञ्चिताः। सत्यज्ञानशान्तकरुणातपोविरक्त्यादिदैवगुणाः यत्र कुत्रापि विद्यमानाः अपि भगवत्स्वरूपा एव। ते भगवद्विभागा एव। शक्तिहीनानामेव साधनार्थं रूपादयः कल्पिताः इति सर्वैः ज्ञातव्यम्। स्त्रियोऽपि भगवद्ज्ञानप्राप्तेः योग्याः एव। भगवानेव कीर्ति लक्ष्मी वाक् स्मृति मेधाधैर्य क्षमानामकसप्तगुण -विशिष्टस्त्रीषु परमात्मा वर्तते इति प्रोक्तम्। कीर्तिश्श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा। ''यद्यद्विभूति...... मम तेजोंशसंभवम्'' इत्यत्र श्लोकः। अत एव ''अत्त्यादपि परो धर्मः अमेध्यादपि काञ्चनं'' ग्राह्यमिति शास्त्रैः प्रोक्तम्।

(अनुवर्तिष्यते)

# अयोध्यावासिनं रामं नमस्कुर्मः सदा-वयम्

डा।। धूळिपाळमहादेवमणिः
- चरवाणी - ९४९४००२४७

रामं भजत श्रीरामम्
अलं विवादेन न मानुषोऽयम्
रामात्मना राक्षसमर्दनाय।
भुजंगशय्यां परिमुच्य साक्षात्
नारायणो भूतलमाजगाम।।

अद्भुतोयं श्लोकः श्रीरामकर्णामृतग्रन्थे वर्तते। भगवतो नारायणस्य अवतारप्रस्थानेषु रामावतारो नाम धर्मावतारः सत्यनिबद्धावतारः। ''किमर्थं रामावतारः?'' कोऽयं राम शब्दः? इत्यादिषु प्रश्नेषु जायमानेषु राक्षसमर्दनार्थमिति समाधत्ते।



रामनामनि प्रथमाक्षरस्य ''रा'' इत्यस्य ''राक्षसानाम्'' इति षष्ठ्यन्तोह्यर्थो बोध्यः। ''म'' इति मर्दनाय इति चतुर्थ्यंतस्य बोधको भवति। अतः संग्रहरूपेण ''राम'' शब्दो भवतीति तत्कविना रामावतारस्य, रामशब्द वैशिष्ट्यं च भणितम्।

**राम सौन्दर्यम् -** राममधिकृत्य अयोध्यावासिनः जनाः तत्सौन्दर्यानन्दतन्मयाः प्रशंसापूर्वकमेवमूचुः।

१. यश्च रामं न पश्येत्तु
यं च रामो न पश्यति।
निन्दित स्सर्वलोकेषु
स्वात्माप्येनं विगर्हते।।
(अयोध्या, १७ सर्ग २.१७.१४)

रामः नर राक्षस मृग पक्ष्यादि भेद रहितानां सर्वेषां प्राणिनां दर्शन मात्रेण सपदि आनन्ददायकश्चचार। अतस्तादृशं रामं यो न पश्यति तज्जीवितं व्यर्थमेव। लोकेषु सर्वेषु सः निन्दितः आसीत्।

तस्य रामादर्शनदुष्कीर्तिः शीघ्रं व्याप्ता भवेत्। तथा रामेण यो न दृष्टः तस्य जीवनमपि एवमेव निन्दितमेव। व्यर्थमेवेति। तस्य आत्मापि एतादृश देहवन्तं गर्हते=छीत् करोति। अद्वैत बुद्ध्या आत्मा नाम परमात्मैव। निर्गुण ब्रह्मापि तं देहिनं द्वेष्टि। एतादृश दौर्भाग्य देहे माया कञ्चित्कालं वस्तव्यमस्तीति स्वात्माप्येवं विगर्हते इत्यस्यार्थः।

तथा - अरण्ये तपस्विनः मुनयोऽपि रामं दृष्ट्वा तदद्भुतं रूपं मनसि निधाय रामं पूर्ण पुरुषमिव, आत्मनः स्त्रियः मन्यमनाः चिरकालं समाधौ रेमिरे। अतयेव ''रमन्ते योगिनः अस्मिन्निति रामः'' इति रामनाम निर्वचनस्य सार्थक्यं लभते।

सीता विवासानन्तरं रामेण अश्वमेधयागः सङ्कल्पितः। पत्नीं विना क्रतुर्न कर्तव्यः इति सम्प्रदायेन रामः वशिष्ठोपदेशेन धर्मशास्त्ररीत्या स्वर्णसीतया क्रतुं कर्तुमुद्युक्तवान्। तदर्थं स्वर्णकारैः अनेकानि स्वर्णसीतारूपाणि सृष्टानि। किन्तु यस्य कस्यचिदपि स्वर्णविग्रहस्य सीतामूर्त्तिमत्वं न प्राप्तम्। अतस्ते विग्रहाः सर्वे एकस्मिन् भवने निक्षिप्ताः आसन्।

कदाचिद्रामचन्द्रः केनचचिदवसरेण तद्भवनं प्रविष्टः। यदा रामस्तद्भवनं प्रविष्टवान् तत्क्षणमेव सीतामूर्तयः सर्वाः रामसौन्दर्यकान्त्या चैतन्यं लब्ध्वा रामपाणिग्रहणं कर्तु मागताः। श्रीरामोऽपि तद्धठात्परिणामेन किञ्चित् निश्चेष्टितवान्।

अनन्तरं स्वस्थो भूत्वा 'हे स्वर्णसीताः! अस्मिन्नवतारे मे एकपत्नीव्रतनिबन्धनमस्ति। आगामिकृष्णावतारे भवतीनाम् अभिवाञ्छाः फलिष्यन्ति। भवत्यः सर्वाः मैथिली नाम्ना किंचित् गोपीयूधमिव अवतरिष्यन्ति। तस्मिन् भवत्यस्सर्वाः मम पत्न्यः भविष्यन्ती'त्युक्तवान्।

तदेतत्सर्वं रामचन्द्रस्य अद्भुतसौन्दर्यकथनमेवेति ज्ञायते।

**रामनाम महात्म्यम्** - रामावतारात् पूर्वमेव वेदेषु राम शब्दो वर्तते इति, तद्रहस्यं महादेवेन ज्ञातमिति च एकेन ऐतिह्येन बोध्यते।

**कृत्स्नं रामायणं प्रोक्तं**
**शतकोटि प्रविस्तरम्।**
**एकैकमक्षरं प्रोक्तं**
**सर्वपापविनाशनम्।।**

प्रथमतः रामायणं शतोकोटि श्लोकैः ग्रथितम्। तस्मिन् ग्रन्थे विद्यमानमेकमप्यक्षरं समस्त पापनाशन सामर्थ्यं वहतीति श्लोकस्यास्य अर्थः। एतद्विषये तत्तत् विज्ञातारः प्राचीनं वृत्तान्तम् एवम् वदन्ति। पूर्वं जगतः स्रष्टा ब्रह्मा सृष्टेः पूर्वमेव कृत्स्नं रामायणं निर्माय त्रिलोकवासिनां कृते वेदफलरूपेण दत्तवान्। तेन एतादृश महाग्रन्थस्य त्रैलोक्यवासिनः सर्वे दायादाः भवन्ति। अतस्ते समानं भागं प्राप्तुं महादेवं प्रार्थितवन्तः। शङ्करस्तु लोकानां त्रयाणां कृते तं विभज्य तेषा मेकैकस्य ३३,३३,३३,३३३ श्लोकान् दत्वा शिष्टं श्लोकमेकं त्रयाणां विभज्य दातु मशक्नुवन् स्वसमीपे निक्षिप्तवान्। सा एव

**श्री राम राम रामेति रमे रामे मनोरमे**
**सहस्रनाम तत्तुल्यं रामनाम वरनने।**

इति द्वात्रिंशदक्षर परिमितःश्लोकः।

किन्तु ते नाङ्गीकृत्य सोऽपि विभज्य दातव्यः इति प्रार्थितवन्तः। अतो भगवान् शम्भुस्तमपि अक्षरशः विभज्य एकैकस्य लोकस्य दश दश अक्षराणि ददौ। तद्रीत्या पुनरपि अक्षरद्वयं शिष्टमभूत्। तद्द्वयं त्रिलोकवासिनः सर्वे शम्भो रूपायनार्थं दत्तवन्तः।

तदक्षर द्वयमेव **राम** इति।

यदक्षर द्वयं सकलस्यापि रामायणस्य मूलं, सर्वमन्त्राणां श्रेष्ठम्, वेदसन्निभ मस्ति तदेव अक्षरद्वयं भगवान् शम्भु श्चातुर्येण शेषमिव कृत्वा तैरुपायेन विभजन कर्मोपायन रूपेण त्रिलोकवासिभिरवाप्तवानिति रामायणतत्त्वज्ञाः फेणुः। अतः सर्वज्ञो भगवान् शङ्कर एव तन्नाम तत्त्व सुम्पूर्ण विज्ञाता भवति। तथा च जगतः पिता शङ्करः तत्पदमेव निर्गुणं ब्रह्म इति ज्ञात्वा नित्यमात्मान मात्मना पश्यन् ध्यानावस्थितो भवति। आत्मारामो भवति। **जानाति राम! तव नामरुचिम् महेशः जानातिगौतमसतीचरणप्रभावम्।।**

इति रामकर्णामृतग्रन्थः रामनाममाहात्म्यम् वक्ति। अपि च

**यन्नामैव सहस्रनाम सदृशं यन्नाम वेदैस्समं**
**यन्नामाश्रित वाक्यमासुर वरस्त्रीगर्भ विच्छेदकं।।**
**यन्नाम श्वपचार्य भेद रहितं मुक्तिप्रदानोज्वलम्**
**तन्नामालघु रामरामरमणं श्रीरामकर्णामृतम्।।**

इति चाप्यस्ति।

रामः इत्याख्या विष्णुसहस्रनाम सदृशं भवति। चतुर्वेदसमो भवति। दुष्टराक्षस गर्भस्थ पिण्डदाहको भवति। सर्वासां जातीनां समभावेन परिरक्षको भवति। सर्व प्राणिनां जपमात्रेण मोक्ष प्रदायकं भवति। तदेव रामनाम कर्णामृतं च।

यथा वयं तन्मूर्तिं मनसि निधाय जपामः स्म तथा अस्माकम् मनस्सु वयं सर्वे राममन्दिर निर्मातारः एव। इदानीं तन्मन्दिरम् अस्मद्भारतदेशे अयोध्यानामक वैकुण्ठ नगरे स्थापनीयमस्ति। तद्विषये वयं सर्वे बद्धकङ्कणाः भूत्वा अयोध्यां निरीक्षामहे सम्पूर्ण रामालय निर्माण प्रवेशनार्थं निरीक्षामहे।



# तिरुमलक्षेत्रे "श्रीस्वामिनः अध्ययनोत्सवाः"

## (12-12-2023 तः 05-01-2024 पर्यन्तम्)

प्रति वत्सरं तिरुमलक्षेत्रे डिसेम्बर् मार्गशिरमासे वैकुण्ठ एकादश्याः पूर्वं दशदिनानि : रङ्गनायक मण्डपे श्रीस्वामिनः अध्ययनोत्सवाः प्रचलिष्यन्ति। अयम् उत्सवः पञ्चविंशतितमे दिने परिसमाप्तः भवति।

अस्मिन् अध्ययनोत्सवे नालायिर दिव्य प्रबन्धात् चतुस्सहस्र पाशुराणां सर्वेषामपि स्थिरासने भूत्वा अविरामेण अनुसन्धानं कुर्वन्ति। वैकुण्ठ एकादश्याः पूर्वं दश दिनानि प्रातः समये 'पगल् पत्तु' मध्ये स्थित प्रथम द्विसहस्र पाशुरान् (मुदालायिरं, पेरियतिरुमळि) अनुसन्धानं कुर्वन्ति। एकादशीतः दशदिनानि रात्रौ रापत्तु मध्ये स्थित द्विसहस्र पाशुराणाम् (इयर्पा, तिरुवाय् मोळि) अनुसन्धानं कुर्वन्ति। एकविंशति दिने रामानुज नूट्रन्दादि, उपदेशरत्नमालाः अनुसन्धानं कुर्वन्ति। तिरुमल श्रीस्वामिनः सन्नधौ द्वाविंशतितमे दिने 'कण्णिनुन् शिरुत्ताम्बु', त्रयोविंशतितमे दिने 'रामानुज नूट्रन्दादि', चतुर्विंशति दिने श्री वराहस्वामिनः सन्निधौ 'शात्तुमुरै', पञ्चविंशतितमे दिने 'तन्नीर् अमुदु' उत्सवेन अध्ययनोत्सवानां शुभसमाप्तिः भविष्यति।





15-10-2023 दिनाङ्कतः 23-10-2023 दिनाङ्क पर्यन्तं नवरात्रि ब्रह्मोत्सवाः अत्यन्त वैभवेन आयोजिताः। अस्मिन् सन्दर्भे ति.ति.देवस्थानस्य श्री श्री श्री पेद्द (ज्येष्ठ) जीयर् स्वामी, श्री श्री श्री चिन्न (कनिष्ठ) जीयर् स्वामी, ति.ति.दे. पालक मण्डल्याः अध्यक्षः ति.ति.दे. कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानस्य संयुक्त कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानस्य पालक मण्डली सदस्याः, ति.ति.देवस्थानस्य अन्ये प्रमुखाः च भागं गृहीतवन्तः।











अस्य नवरात्रि ब्रह्मोत्सवस्य समये सर्वत्र भारतदेशात् आगत विविध कळाकार बृन्दाः भागं गृहीत्वा, चतुर्षु माडवीथिषु नृत्यप्रदर्शनं कृतवन्तः। अस्मिन् सन्दर्भे भक्तजनाः भागं गृहीत्वा भगवतः आशीर्वादान् प्राप्तवन्तः।















22-10-2023 दिनाङ्के आन्ध्रप्रदेश् राज्यपालः गौ।। श्री अब्दुल् नजीर् दम्पती तिरुमल श्री स्वामिनः दर्शनं कृतवन्तौ। तयोः ति.ति.देवस्थानस्य पालकमण्डल्याः अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः स्वामिनः प्रसादं दत्तवान्।



18-10-2023 दिनाङ्के तिरुमल श्रीवारिसदन् - २ मध्ये श्री स्वामिनः सेवकान् उद्दिश्य ति.ति.देवस्थानस्य पालकमण्डल्याः अध्यक्षः श्री भूमनकरुणाकर रेड्डि महोदयः भाषणं दत्तवान्।



अस्मिन् कार्यक्रमे ति.ति.दे. पि.आर्.ओ डा।। टि. रवि, अन्नमाचार्य प्राजेक्ट् निर्देशकः डा।। ए.विभीषण शर्मा ए.पि.आर्.ओ कुमारी पि.नीलिमा, ''श्रीवारि सेवा'' ए.ई.ओ.श्री रविकुमार् रेड्डि इत्यादयः भागं गृहीतवन्तः।



07-10-2023 दिनाङ्के तिरुपति श्रीगोविन्दराज स्वामी उन्नत पाठशालायाम् आयोजित ''स्पेस् एग्जिबिषन्' ति.ति.दे.संयुक्त कार्यनिर्वहणाधिकारिणी (वैद्य विद्या) श्रीमती सदा भार्गवी प्रारम्भं कृतवती।



अस्मिन् कार्यक्रमे ति.ति.दे. विद्याशाखाधिकारी डा।।एम.भास्कर रेड्डि, षार्.ग्रूप्., निर्देशकः श्रीगोपीकृष्ण, ति.ति.दे. पाठशालानां प्रधानोपाध्यायः श्री चन्द्रय्य, श्री कृष्ण मूर्ति, श्री सुरेन्द्र, श्रीमती पद्मावती, श्रीमती सन्ध्या, अन्ये प्रमुखाः च भागं गृहीतवन्तः।





श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

**भूमीनीलास्तुतिः -**

**श्लो. ८. श्रीमन्महारसिकशेषधराधिनाथ -**
शृङ्गार योग्य गुण वैभव भासुराङ्गयौ।
देव्यौ मुहु र्घटयतां मयि भूमिनीले
संसारदाव परिताप हरान् कटाक्षान्॥

**ता -** श्रीशेषशैलपतिः श्रीनिवासोऽत्यन्तम् आनन्द परिपूर्णः। तादृशस्य तस्य शृङ्गार रसानुभव योग्यतया सौन्दर्यप्रीत्यादिभिः विलसद्भ्यां दिव्यवपुर्भ्यां विशिष्टे भूमिनीलादेव्यौ। भगवतः प्रीतिपात्रे ते उभेऽपि मयि कटाक्षान् प्रसार्य मम संसाररूपदावाग्नेः उद्भूतं सकलमपि तापम् अपहरताम्।

**सु.सौ.व्याख्या -** पूर्वस्मिन् श्लोके जगत्पतेः पुरुषोत्तमस्य महिषी रमा सम्प्रार्थिता। तदनन्तरं चात्र तदवयवसदृश्यौ भगवतो रसानुभव योग्ये भूमिनीलाख्ये देव्यौ संस्तूयेते।

श्रीमन्.... नाथ.... श्रीः अस्य अस्तीत्यर्थे 'तदस्य....' अष्टा ५.२.९४ इत्यादि सूत्रेण नित्ययोगेऽतिशये वा मतुप् प्रत्यये श्रीमत् शब्दो निष्पन्नः। रसं वेत्ति अनुभवति वा इति रसिकः, महांश्चासौ रसिकश्च महारसिकः। रसो नाम आनन्दः। अतिशयितानन्द विशिष्ट इति भावः। 'रसो वै



सः' इति श्रुतिः भगवतो रसस्वरूपत्वम् अभिधत्ते। अपि च विश्वैकमोहनस्य श्रुङ्गाररसस्य अधिदेवता विष्णुरिति च नाट्यशास्त्रेऽभिहितः "श्रुङ्गारो विष्णुदेवतः" इति। शेष इति धरः शेष धरः पर्वतः महीध्रशिखरिक्ष्माभृत् अहार्यधर पर्वताः - २.३.१. इत्यमरः। तस्य अधिनाथः प्रभुः वेङ्कटेशः। श्रीमांश्च महारसिकश्चासौ श्रीनिवास इति भावः। तस्य इति उत्तरत्रान्वयः।

श्रृङ्गार.....भासुराङ्ग्यौ - तस्य देवदेवस्य यः श्रृङ्गारः तद्रसानुभवः, तस्य योग्यः अनुरूपः यो गुणानां सौन्दर्य सौकुमार्यादीनां वैभवः, तेन भासुरे प्रकाशशीले अङ्गे दिव्यदेहे ययो स्ते श्रुङ्गार... भासुराङ्ग्यौ। महारासिक गोविन्द रसानुभवानुगुण सौन्दर्यादि गुणविशिष्ट रमणीय दिव्य विग्रह सम्पन्ने इति तात्पर्यम्।

**भूमिनीले** - भूमिश्च नीला चेति इतरेतरयोगद्वन्द्वः। भूर्भूमि रचला' अमर-२.१.२. इति कोशेषु प्रसिद्धा भूदेवी विष्णुपत्नी। अपरा चेयं नीलादेवी विष्णुसती। एषा द्रविडसम्प्रदाये "नप्पिन्नै" नाम्ना प्रस्तूयते। श्रीवैकुण्ठे जगन्नाथस्य पार्श्वतः श्रीभूभ्यां साकं विराजमाना नीला कृष्णावतार समये तस्य अत्यन्त प्रीतिपात्री भूता तेन स्वयंवरे जिता च। एषा गाथा हरिवंशे वर्तते इति अप्पयदीक्षितवर्यैः यादवाभ्युदय व्याख्यायाम् एवं प्रस्तुता -

विदेहनगरे यशोदानुजः कुम्भको नाम गवां पतिरासीत्। तस्य व्रजे कालनेमेः असुरस्य सुताः सप्त पूर्वं भगवता निर्जिताः तद्वैरम् अनुस्मृत्य कृष्णस्य अपकारं कर्तु मिच्छन्तो वृषभरूपेण न्यवसन्। तैश्च गोकुलवित्रासन, सस्य भक्षणप्रभृतिषु उपद्रवेषु क्रियमाणेषु सत्सु कुम्भकः तान् स्वयं दमयितुम् अशक्तोऽभूत्। ततश्च तद्वारणाय सः - "यो बलवान् एषां सप्तवृषभाणां दमयिता, तस्मै मम पुत्रीं नीलां दास्यामीति प्रतिज्ञां कृतवान्। तदनन्तरम् एकदा कृष्णः तत्र समागत्य तान् सप्त उक्ष्णी मारयित्वा नीलां प्राप्य तां परिणीतवान् - इति।।

**संसार.... हरान्** - संसार एव दावः वनाग्निः संसारदावः। दावस्तु दवो वनहुताशनः" १.१.५७ इत्यमरः। तेन ये परितापाःक्षोभाः तान् हरन्ति निर्मूलयन्ति इति संसारदावपरितापहराः। सांसारिकदुःखहेतूनां जननमरणादीनां प्रणाशकाः इति यावत्।

कटाक्षान् - कटाक्षः अपाङ्गवीक्षणम्। नेत्रान्तदर्शनेनापि भूयो भूयः कृपां प्रसार्य माम् अनुगृह्णीताम् भूमिनीलादेव्यौ इति प्रार्थ्यते।।

पूर्वश्लोकवत् अत्रापि वसन्ततिलका वृत्तम्।।

(अनुवर्तिष्यते)



## अक्टोबर् २०२३ लघुप्रश्नोत्तरी समाधानानि

१. रामतीर्थः
२. श्रीकृष्णस्य
३. तिमिति
४. अधर्ववेदस्य
५. वल्लभाचार्यः
६. श्रीशैलक्षेत्रे
७. कृष्ण यजुर्वेद
८. तञ्जावूर समीपे
९. बृहस्पतिः
१०. कर्णप्रयागे
११. विश्वकर्मा
१२. सुतले
१३. ६३
१४. बृन्दावनम्
१५. सिन्धु





# वीरवनिता विश्पला

खेलराजः नाम कश्चित् नृपः। विश्पला तस्य पत्नी। सा यथा महाविदुषी आसीत्, तथैव रणकुशला अपि आसीत्। खेलराजः अपि शूरः पराक्रमी च आसीत्। सः विश्पलया सह सुखेन जीवति स्म।

अथ कदाचित् शत्रवः खेलराजस्य राज्ये आक्रमणं कृतवन्तः। महत् युद्धम् आरब्धम्। सेनायाः नायकः खेलराजः रणरङ्गं प्रविष्टवान्। विश्पला अपि रणरङ्गं प्रविष्टवती। भुवम् अवतीर्णा चामुण्डेश्वरी इव सा शत्रूणां संहारं कृतवती। तस्याः शौर्यं पराक्रमं च दृष्ट्वा शत्रवः अपि चकिताः अभवन्।

एषा रणरङ्गात् यावत् न निवार्यते तावत् जयः सर्वथा न प्राप्यते' इति चिन्तयित्वा शत्रुसैनिकाः युगपत् आक्रम्य ताम् अवरुद्धवन्तः। शत्रुसैनिकाः ते असङ्ख्याः आसन्, विश्पला तु एकाकिनी। तथापि तस्याः मनसि न भीतिलेशः अपि आसीत्। प्रत्युत द्विगुणितेन उत्साहेन युद्धं कृतवती। युद्धसमये शत्रुसैनिकाः तस्याः एकं पादं कर्तितवन्तः। अनन्तरम् 'इतः परम् एतस्याः कारणात् पीडा न भविष्यति' इति निर्णयं कृत्वा शिबिरं प्रतिगतवन्तः।

यद्यपि विश्पलायाः पादः भग्नः तथापि सा हतोत्साहा न जाता। चैतन्यमूर्तिः सा वीराङ्गना एव आसीत्। 'श्वः मया युद्धं करणीयम् एव' इति निश्चित्य सा पादं पुनः प्राप्तुम् ऐच्छत्। अतः सा निश्चलतया उपविश्य अश्विनीकुमारयोः ध्यानं कृतवती। तस्याः भक्तेः कारणात् अश्विनीकुमारौ लोहयुक्तं पादं योजयित्वा तां यथापूर्वं कृतवन्तौ। एतस्मात् विश्पला यथापूर्वं चलितुं युद्धं कर्तुं च समर्था जाता।

अनन्तरदिने प्रातः सा महता उत्साहेन रणरङ्गम् आगतवती। रणरङ्गे तां दृष्ट्वा एव शत्रुसैनिकाः चकिताः भीताः च। तस्याः दर्शनमात्रेण एव तेषां धैर्यं नष्टं जातम्। सा यदा आयुधप्रहारम् आरब्धवती तदा ते सर्वथा हतोत्साहाः जाताः। विश्पला शत्रून् कदलीवृक्षान् इव लीलया कर्तितवती। सहस्राभिकाः सैनिकाः तया संहृताः। एवं विश्पलायाः शौर्यस्य कारणतः तस्मिन् युद्धे खेलराजस्य एव जयः अभवत्।

वीरवनिता विश्पला भर्त्रा सह रणरङ्गं प्रविश्य शौर्येण युद्धं कृतवती। पादकर्तनानन्तरमपि अश्विनीकुमारयोः अनुग्रहेण पादं पुनः प्राप्तवती शत्रून् संहृतवती च। एतेन साहसेन सा वेदवाङ्मये बहुधा प्रशंसिता।

विश्पलायाः शौर्यं तथा च अश्विनीकुमारयोः शल्यक्रियाकौशलं स्मरन्तु इति अस्मान् उपदिशति इतिहासः।



# स्त्री - स्वातन्त्र्यम्

- डा.वि.पावनी
चरवाणी - ९८६६५६५२५५

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति।।**

इति प्राचीनानां सूक्तिरेका प्रसिद्धा वर्तते। बाल्यादारभ्य आविवाहात् पिता, यौवने भर्ता, वार्धके पुत्रः रक्षन्ति पोषयन्ति च। अत्र एकः सन्देहः समुत्पद्यते। अस्याः सूक्तेः साक्षादर्थः विपरीतेनाभिवर्ण्य आधुनिककाले बहुकोलाहलादिकं कुर्वन्तः सन्ति। यतोहि अधुनातन वैज्ञानिकयुगे स्त्रीणां कृते स्वातन्त्र्यम् आवश्यकं न वेति विषये बहुधा चर्चा दरीदृश्यते। एतेषां विप्रतिपत्तिः का इत्युक्ते तासां स्वातन्त्र्यं नास्ति, तदावश्यकमिति।

अत्र प्रथमं स्वातन्त्र्यपदस्य अर्थः वर्णनीयः। इतरेषां सहकारं विना यः स्वशक्त्या कार्यसिद्धिम् अवाप्नोति सः स्वतन्त्र इत्युच्यते। पराधीनस्तु तथा न। पिता रक्षति कौमारे.... इत्यत्र स्त्रियः स्वकार्यनिर्वहणासमर्थाः इति अर्थः सिध्यति। एवम् अस्याः सूक्तेः विपरीतार्थमभिवर्ण्य पुरुषैः तासाम् अल्पः अवकाशः कल्पितः। आसायं महानसे बन्दीकृताः। पूर्वकाले एव पुरुषाः स्त्रियः भोग्यवस्तुरूपेण परिकल्पितवन्तः इति इदानीन्तनाः जनाः निन्दन्ति।

पुरा तावत् स्त्रीणां कृते वेदाध्ययनार्थं संस्कृतवाङ्मयस्य अभ्यसनावकाशः कल्पितः। व्यासेन निर्मित महाभारतेतिहासे स्त्रीणां विद्याधिकारः अवर्तत इति बहूनां कथानां दर्शनेन ज्ञायते। ताः आध्यात्मिकचिन्तनपराः अपि आसन्। अद्यतनीयानां जनानां पुराणेतिहासेष्वपि स्त्रियः अस्वतन्त्ररूपेणैव दर्शिताः इति दुरूहः वर्तते। स्त्रियः प्रायः जन्मनैव अबलाः। पूर्वस्मिन् काले अबलाजनपरिरक्षणविषये अत्यन्तं जागरूकता स्वीक्रियते स्म। नारीणां शीलरक्षणं पुरुषाणां प्रथमकर्तव्यमासीत्। अपत्नीकस्य यज्ञादि कर्मसु अर्हता नासीत्। तादृशम् उन्नतस्थानं स्त्रियाः पूर्वैः कल्पितम्। महाभारते स्त्रीणां पात्रचित्रणं परिशीलयामश्चेत् तादृश्यः स्त्रियश्च अधुना न सन्ति न भवन्तीति निश्चप्रचतया वक्तुं शक्यते। शकुन्तला, द्रौपदी, कुन्ती, गान्धारी इत्यादयः स्त्रियः धैर्यशालिन्यः दृश्यन्ते। सर्वेषु कार्येषु स्त्रीणाम् अभिप्रायाणां गौरवं गणना चासीत्। स्त्रीणां स्वातन्त्र्यं चासीत्।

कालान्तरे समाजधर्माः परिणताः। मनुस्मृतेः आरभ्य अद्यतन मानवाधिकार निर्माणपर्यन्तं नैके संस्काराः समुद्भूताः। देशकालस्वभावानुसारेण सर्वजनामोदयोग्यः भवेत् धर्मः अथवा धर्मशास्त्राणि। भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा इति आर्योक्तिः। वेदपुराणेतिहासेषु ये धर्माः अनुसरणीयाः इति निरूपिताः ते सर्वकाल सर्वावस्थासु आमोदयोग्याः एव। परं भारतीयैः अधुना खण्डान्तरीय संस्कारमापाद्य आहार विहार व्यवहारेषु नूत्नभावाः समुपकल्पिताः भवन्ति। अत्र तु येन केनाप्युपायेन धनार्जनं कर्तव्यमिति चिन्तयन्ति। केवलपुरुषसम्पादनेन जीवनयापनं दुष्करं भवतीति धिया स्त्रियः अपि धनसम्पादनार्थं प्रयत्नं कुर्वन्ति।

पूर्वकाले स्त्रीणां विद्याधिकारः आसीत्। परं धनसम्पादनाय ताभिः न पठितम्। इदानीं धनसम्पादकविद्यामभ्यस्य स्वरक्षण पोषणादि कार्येषु समर्थाः भवन्ति। युक्तमेवैतत्। एवमेव पराधीनत्वाभावरूपमेव स्वातन्त्र्यम् इति चिन्तनीयम्। तद्द्वारा भारतदेश नारीमणयः सर्वेषां मूर्धन्याः भवेयुः। यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः इत्युक्तया रीत्या भारतदेश गौरवमभिवर्धयन्त्यः स्त्रियः समुचितस्थानं सर्वथा अलङ्कुर्वीरन्। वस्तुतः इदानीं स्त्रीस्वातन्त्र्यविषये चर्चा अनावाश्यकी, यतः इदानीं सर्वधा स्त्रिः स्वातन्त्र्यमनुभवन्त्येव। कालः सर्वस्य कारणम्।



# गार्दभः अपि गुरुः अस्ति

तमिळ मूलम् - श्रीमती श्रीनिधीः
चित्राणि - श्री कमलकन्नन्
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८९४३१५०८३३

गुरुकुले गुरुः पाठं पाठयित्वा किञ्चित्कालं यावत् शिष्यैः सह वार्तालापं करोति स्म। एकदा शिष्यः स्वगुरुं पृष्टवान्....




ये पाठं पाठयन्ति ते शिक्षकाः एव। यः तं पाठं शिक्षते सः शिष्यः एव। अतः यैः अहं शिक्षितम् ते सर्वे मम गुरवः।



इदानीं यदि पश्यसि, गार्दभोऽपि मम गुरुः।

शिष्याः गुरुणा उक्तं न अवगच्छन्। अतः ते तम् अवगन्तुं पृष्टवन्तः अथ गुरु...








प्रातःकाले गर्दभः मलिनवस्त्रपुटं पृष्ठे धृत्वा आनयति। सः पृष्ठे राज्ञः वस्त्रं च अन्यभृत्यानां जनानां च मलिनवस्त्राणि अपि वहति स्म। एतानि वस्त्राणि मलिनानि, दुर्गन्धानि च इति सः कदापि न चिन्तितवान्। तस्य मनसि न आनन्दः आसीत् यत् अहं राज्ञः वस्त्रं वहन् अस्मि तथा च तस्य दुःखं नासीत् यत् अहं भृत्यस्य वस्त्रं वहन् अस्मि इति।

तथा सायंकाले स गार्दभः पृष्ठे प्रक्षालितशुचिसुगन्धितवस्त्रं वहन् प्रत्यागच्छति स्म। प्रातःकाले तस्य समीपम् आगत्य पिहित नासिकः पिधाय आगतः प्रक्षालकः इदानीं गर्दभेन सह सायंकाले महता आनन्देन आगच्छति स्म। सः पुरुषः राज्ञः, भृत्यानां, अन्येषां जनानां वस्त्राणां सुगन्धदुर्गन्धयोः भेदं कर्तुं समर्थः आसीत्। परन्तु सः खरः केवलं स्वस्य परिश्रमं स्वस्य लक्ष्यं मन्यते स्म तादृशं किमपि भेदं न अनुभवति स्म। सः सर्वदा एक एव मनसि चिन्तयति।



सुखसमये हर्षेण कूर्दनं, शोकसमये दुःखेन विलपनम् इत्यादिकं विना सर्वकालेषु एकरूपेण जीवनम् अहं तस्मात् गार्दभात् शिक्षितवान्। ज्ञानं ज्ञातवान्, उच्चनीचादिकं न दृष्ट्वा सद्गुणः, सर्वदा समानचित्तः भवेत् इत्यादि। अत एव सः गर्दभः अपि मम गुरुः अभवत्।



स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

## बालविनोदिनी







## रसप्रश्नाः

१. देवव्रतः कः?

२. स्वर्गात् गङ्गावतरणं कः कृतवान्?

३. कस्मिन् युगे श्रीकृष्णः आसीत्?

४.दशावतारेषु अन्तिमावतारः कः?

५.श्रीकृष्णस्य शङ्खस्य नाम किम्?

६.वाल्मीकि महर्षेः निजनाम किम् ?

(समाधानानि - १. भीष्मः २. भगीरथः ३. द्वापर युगे ४. कल्किः ५. पाञ्चजन्यं ६. रत्नाकरः)








(१. खगः नास्ति २.झन्डा नास्ति ३.मीनं नास्ति ४.कमलं नास्ति ५. हंसः नास्ति ६. तरङ्गं नास्ति ७. रज्जुः नास्ति)



# लघुप्रश्नोत्तरी





तिरुमलतिरुपतिदेवस्थानानि

१७

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. अज्ञातवास समये विराट राज्ये अर्जुनस्य नाम किम्?
२. धृतराष्ट्रः कस्याः पुत्रः?
३. बकासुरस्य वधं कः कृतवान्?
४. रावणासुरस्य माता का?
५. दशरथस्य पुत्री का?
६. पार्वत्याः पिता कः?
७. इन्द्रस्य भार्या का?
८. मेघनाथः कः?
९. शनैश्चरस्य पिता कः?
१०. दशाननः इति कस्य अपरं नाम?
११. विष्णोः त्रुतीयः अवतारः कः?
१२. अयोध्या समीपे कस्याः नद्याः प्रवाहः द्रष्टुं शक्नुमः?
१३. कस्मिन् वेदे रोग निवारण पद्धतिः दृश्यते?
१४. महाभारतं कः लिखितवान्?
१५. कस्मिन् युगे श्रीरामः आसीत्?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःयाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.११.२०२३ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

दि.27-12-2023 तिरुपतिस्थौ तुडा प्राङ्गणे कच्छपि नाम कलाक्षेत्रे वेङ्कटेश्वर आयुर्वेदकळाशाला, तिरुपति, केन्द्र आयुष् मन्त्रित्वशाखा, नव देहली, सम्युक्त त्रिदिवसीय आयोजित 'आयुर्वेद पर्वम् २०२३', दृश्यमालिका। अस्मिन् कार्यक्रमे ति.ति.देवस्थानस्य सम्युक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, केन्द्र 'आयुष्' शाखा संयुक्त कार्यदर्शी श्री बिश्वजित् सिंघ्, राष्ट्रिय आयुर्वेद विद्यापीठस्य अध्यक्षः डा.देवेन्द्र त्रिगुण् आयुष् डा.मनोज् नेसारी, एन्.सि.ऐ.एम्., अध्यक्षः डा.जयन्त् डियो पूजारी, एस्.वि.आयुर्वेद कालाशाल प्रांशुपालाः डा.रेणू दीक्षित् तथा अध्यापकाः च भागं गृहीतवन्तः।
























SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-11-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023" LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023" Posting on 5th of every month.

# गीता जयन्ती

## 23-12-2023

Thulasiprasad K.